# श्रीमारुतिस्तवः

॥ श्रीमते रामाय नमः ॥

एतत्स्तवीयपचैकैकपादप्रथमाऽक्षरैरुच्चार्यमाणा

रामरक्षास्तोत्रीयाएते श्लोकाः -

शिरो मे राघवः पातु भालं दशरथात्मजः ।

कौशल्येयो दृशौ पातु विश्वामित्रप्रियः श्रुती ॥ १॥

घ्राणं पातु मखत्राता मुखं सौमित्रिवत्सलः ।

जिह्वां विद्यानिधिः पातु कण्ठं भरतवन्दितः ॥ २॥

स्कन्धौ दिव्यायुधः पातु भुजौ भग्नेशकार्मुकः ।

करौ सीतापतिः पातु हृदयं जामदग्न्यजित् ॥ ३॥

मध्यं पातु खरध्वंसी नाभिं जाम्बवदाश्रयः ।

सुग्रीवेशः कटी पातु सक्थिनी हनुमत्प्रभुः ॥ ४॥

उरू रघूत्तमः पातु रक्षःकुलविनाशकृत् ।

जानुनी सेतुकृत् पातु जङ्घे दशमुखान्तकः ॥ ५॥

पादौ विभीषणश्रीदः पातु रामोऽखिलं वपुः ।

इति शम् ।

॥ श्रीः ॥

अथ श्रीमारुतिस्तवः ।

॥ श्रीगणेशाय नमः ॥

मङ्गलाचरणम् ।

राजतेजौपमे विराजते याऽऽसने महति राजतेऽत्र सा ।
सर्वदानवकदध्नि सर्वदा सर्वदा दधिमथी मथीनतात् ॥ १॥

सहंसका हंसगतिप्रवीणा वीणामुपादाय निजां स्वपाणौ ।
सरस्वती सा मम चित्तरङ्गेऽरं गेयमारभ्य नटीव नृत्यात् ॥ २॥

माधवनन्दननित्यानन्दनतो नन्दनन्दनो नन्द्यात् ।
स्वपदारविन्दनन्दितमिन्दिन्दिरमिन्दिरेश ! चाऽऽनन्द्यात् ॥ ३॥

अथ स्तवप्रारम्भः -

शिञ्जानमञ्जुमुकुटैः सुकुटैरिवोच्चै
रोचिर्भिरद्भिरिव रुद्धतराऽन्तरालैः ।
मेध्यैः सुरैः पदयुगं बहु सिच्यमानं
रामाऽनुगस्य विनुमो द्युततरूपमानम् ॥ १॥

घर्मोपमानभवतापजुषः पुमांसोऽ-
वः सत्यमेव सुखदः परिदर्श्यते वः ।
पादद्युपादप उदेति वनौकसोऽर्ति-
तुच्छाय एष इति तत्तलमाश्रयध्वम् ॥ २॥

भा यन्नखेभ्य उदिता मुदिता समुद्र-
लङ्घस्य साधु समये समयादधस्तात् ।
दर्वीकरेभ्य इव सूचयितुं प्रियं स्वं
शर्म प्रयच्छतु कपीशपदद्वयं तत् ॥ ३॥

रक्ता हि यत्र भृशमङ्गुलंयो रमन्तेऽ
थात्सारितेव रुचिरा रुचिराश्रयं यम् ।
मत्वा परं व्रजति रक्ततराऽपि सस्वौ-

जः संयुतो हनुमतो नु मतोंऽघ्रिपद्मः ॥ ४॥

कौ धावतेऽ तिगमिताम्बुधये तु यस्मै
शल्यादिभिर्विरहितां सहितां प्रकाशैः ।
येयामिव स्फुटयितं पदवीं यदीया
योज्येव याति पदरुक्पुरतः स पातु ॥ ५॥

दृष्ट्वा यदीयपदपङ्कजमेकवारं
शौटीर्यवीर्यसहितं जलराशिलङ्घे ।
पापात् प्रमुच्यत इहैव नरश्च पूज्योऽ
तुल्यो भवत्यऽवतु सोऽनिलनन्दनो नः ॥ ६॥

वित्यज्य याति जनकस्य गृहं हि जाता
श्वासारतां सुदधती स्वविवृद्धिकाले ।
मिथ्यात्वहीनमिति निर्दिशतीव यद्वाऽ
त्रस्थेनवेश्म भजते भज ते पदे हृत् ॥ ७॥

प्रिय सर्वदैव बहुरक्ततराऽङ्गुलीषु
यः श्रीमतो हनुमतोऽङ्घ्रियुगप्रकाशः ।
श्रुत्यादिकीर्तितगुणो दशदिक्षु सूर्योऽ-
तीन्धेऽयमित्यऽवगतः कविभिस्सवोऽव्यात् ॥ ८॥

घ्रातव्यभव्यसुरभिः सुरभिः सदा प्र-
णन्दन्मनोभिरमरैर्भ्रमरैरिवोच्चैः ।
पापप्रतापसुसमापनतापरः सोऽ-
तुल्यः पुनातु पुरु पावनिपादपद्मः ॥ ९॥

मय्युच्छ्रितात्मनि क एधत आ इतीव

खज्योतिषां समुदयाय रुषेव रक्ता ।
त्रासं प्रदातुमित एति हि यत्प्रभोद्ध्वं
तार्यात्स देव।भवतो भवतोंऽघ्रिपद्मः ॥ १०॥

इतिपादवर्णनं समाप्तम् ॥

मुञ्चन् फणामजगरोऽतिगरोऽयमित्थं
खं संस्पृशन्नुपरितः परितश्च यस्य ।
सौलभ्यतः परिचितः कविभिः सुपुच्छो
मिथ्यात्वमन्तयतु नः स समीरसूनुः ॥ ११॥

त्रियँ स्वपुच्छमलमच्छकशासुपट्ट-
वत् सन्ततं ह्युपरितः परितः प्रकम्प्य ।
सन्ताडिता हनुमता रिपवः स धूते-
लः कम्पयेत किमुनाऽस्मदरातिवर्गम् ॥ १२॥

जित्वाऽक्षमुच्छलितमन्यपरं प्रतीवाऽऽ-
ह्वां कर्त्तुमीहितवतः समदं समानम् ।
विर्वालधी रयत ऐदिव खं हि यस्याऽ-
द्याऽस्मान् प्रबोधयतु सोऽप्रथमोवनौकाः ॥ १३॥

निन्ये यमाशु शमितां शमितस्वभक्ताऽऽ-
धिः शान्त एव हि हरिस्मरणे हनूमान् ।
पापिद्विषां च शमने स्वयमुद्भटः स्व-
तुल्यं व्यधाच्छमिह गुच्छयतात्स पुच्छः ॥ १४॥

कन्दर्पदर्पदलनं गलनन्दिताऽहिं
ठं दध्युषोऽवतु कपेः स्तिमितः स पुच्छः ।

भव्योऽभवत्तदनु यस्य हि वालहस्तो
रक्षोदयाऽनुगतियन्त्रितसूत्रशाली ॥ १५॥

तन्यात्तमामतिमतिं विहितस्तुतीनां
वन्द्यस्य तद्धनुमतो ललितं सुलूमम् ।
दिष्टाऽहिबन्धनमरिव्रजमाशु येने
तःप्रक्षतोऽपि फणिनेव बबन्ध वीरः ॥ १६॥

स्कन्दाभ ईशजतया च सशक्तितायां
धौरेयतां कपिबले दधदेधतां सः ।
दिष्ट्या तु यस्य भवकूपनिमग्नजन्तून्
व्यामोहितानुपरि कर्षति पुच्छरज्जुः ॥ १७॥

युद्धे हि येन करटीव करेण वीरोऽ-
धः पातयन् विटपिनो नहि विघ्नमाप ।
पापं लुनातु मलमल्लकिनः सुमल्ल-
तुल्यस्य लूममलं मम लम्बितं तत् ॥ १८॥

भुञ्जीत तत्फलमिहैव स यो यदञ्ज्याज्-
जौर्त्यप्रदं परहृदो निदिशन्निरतीव ।
भव्यो हि योऽरिषु तमैक्षयतर्द्धिमाप्याऽ-
ग्नेः पूर्वमात्मनि स पातु कपीशपुच्छः ॥ १९॥

शक्तो निशाचरमहःशिथिलीकृतौ यः
कार्ये वशीकरण आशु च शूर एव ।
मुञ्चेद्वशेस्थितमरिं सुकशैव शोभौ-
कः प्रातु शौयमनिशं बहुशः स पुच्छः ॥ २०॥

इति पुच्छवर्णनं समाप्तम् ॥

कण्ठोत्तमाङ्गलसितौ सुसिताविवाऽही
रौप्याविव स्वतनुजाय हरेण दत्तौ ।
सीदद्भिरेवमरिभिः प्रवितर्किंतौ यौ
तावत्र शं वितनुतां कपिराजबाहू ॥ २१॥

पद्मेशनामकथकान्प्रति नृन्प्रदत्तो-
तिःश्रीशदूत उदितं यमदूतमन्ते ।
पात्यं प्रपात्य मिषतो नु ययोर्दधे तत्-
तुच्छस्य मुद्गरयुगं भज तद्भजौ तौ ॥ २२॥

हृत्याऽङ्गतोऽरिसुदृशां मृतभर्तृकाणां
दस्योः पृथोः स्वसहसा सहसा च हृत्या ।
यन्त्रेण योंऽगदमणेर्भुजयोश्च तत्राऽ-
जानान्नु दाऽर्थचयमाशु विभुः स पायात् ॥ २३॥

मह्युद्भवाऽर्पितमणिग्रहणक्षणेऽनु-
दग्राऽऽननस्य सुकपेर्नमितो भुजो यः ।
न्यस्य स्वकेऽहिसमतां नतपाणिकोष-
जित्। सन्मणीफणमणी मनुते स्तुवे तम् ॥ २४॥

मत्वा गिरिं तृणमिवोद्धृतवान्कपीशोऽ
ध्यङ्ग हि यस्य सहसा स हरीशबाहुः ।
पापैर्निशाचरचयैस्त्रपयैव दृष्टोऽ-
तुल्यः शुचं शमयतामयताञ्च शोभाम् ॥ २५॥

खद्योतमुद्गतमवेत्य रसालमेव

रत्या तमाप्तुमित उत्पततोऽति वातेः ।
ध्वञ्चद्धृणिर्भुजयुगल्यधिरोहिणी या
सीदन्नृणां दिवि गमायतता श्रये ताम् ॥ २६॥

नाभस्वतस्य च सदर्पकचेष्टितं तद्
भिन्दानमर्तिगणमुज्ज्वलचारुशोभम् ।
जाग्रत्पलाशपतनं मधुमाधवीया-
म्बह्वीं श्रियं तुलयदुच्यतु दोर्द्वयं वः ॥ २७॥

वन्येशितुर्भुजलताऽङ्गुलिशाखिकाऽव्या-
दासक्तपाणिदलकङ्कणिकाः च तत्र ।
श्रद्धेयमुत्पृथु दरस्फुटितं सुमं तद्
यः सार्थकः करधृतः खलु मुद्गरोऽस्ति ॥ २८॥

सष्ठु स्मराम्यऽपि च तौ सुकपिप्रवेष्टौ
ग्रीवासुकम्बुमति नाभिजलभ्रमाढ्ये ।
वेलोत्कटे हनुमतोऽङ्ग्युदधौ च यौ साऽऽ
शः सत्कविः सुमनुते तटभित्तिबन्धौ ॥ २९॥

कञ्जासनेन रचिता रिपुताडनाय
टीक्याविमौ हनुमतः किमु दीर्घदण्डौ ?।
पा स्तम्भको हरिरधादुत धर्तुमर्या-
तुन्नं जगन्विति मतौ नम वातिबाहू ॥ ३०॥

इति भुजवर्णनं समाप्तम् ॥

सक्तद्युतेर्द्युतिविभातविभातकालोत्-
थित्यऽच्छकच्छविधृतो रविमण्डलस्य ।

नीकाशभावमयमानमथाऽसमानं
हर्यच्छभल्लपतिमन्त्रिमुखं तदव्यात् ॥ ३१॥

नुत्यो रविः किमुदितो न तु पूर्वसानु-
मत्कूट एष किमु राजति पूर्णचन्द्रः ?।
प्रत्यक्षमेतदह रा मनितं तु यस्याऽऽ-
भुः। सम्मुदा जनकजाऽप्तिजयाऽऽन्तराणि ॥ ३२॥

ऊरू प्रताडयत एव हि तस्य वाते
रूढप्रसादमवलोक्यत आननाब्जम् ।
रत्येति संप्रथित ऋक्षमुखैः सदा स
घूतकृन्निशाटगणमेजयतां मुखेन्दुः ॥ ३३॥

तथ्यं भवेदजलजो यदि पद्म उद्यद्-
मः सर्वदाऽपि च स तापनमण्डलेन ।
पादोत्करेण न हि जात्वऽपि तापितः स्यात्
तुल्यत्वमात्मनि तदैव लभेत येन ॥ ३४॥

रत्या युतः सुकविवत्सुनिबन्धदत्ताऽ
क्षः किं कथञ्चन हठात्तपदप्रयोक्ता ।
कुञ्चन् भ्रुवौ विरचने कविवर्यमानी
लब्धुं कवीश्वरपदं प्रभवेन्मनुष्यः ? ॥ ३५॥

विज्ञाय हेतुत इतोऽतुलतां तु तस्य
नाऽमूदृशो गुणगणं हनुमन्मुखस्य ।
शक्नोमि वर्णयितुमर्णवपूर्णताऽनु-
कृत पार्थवं नु विरमामि नमामि यद्वा ॥ ३६॥

जातं यतो जनकजाऽधिगमोत्तरं चा-
नुध्वानि गर्जितमुदूर्जितमार्जवाढ्यम् ।
नीत्वा स्वकर्णपथमब्धितटे भटेन्द्राः
सेहुर्न कर्णयितुमर्णवपूर्णगीर्णम् ॥ ३७॥

तुष्टा वितर्क्य शिखिनो घनगर्जित्तं यत्
कृतस्नाश्च नैजललनाललनाविलोलाः ।
पाथोधिमाप्तवत आप्तविदेहजस्य
तुष्टिं हनूमत इवाऽऽतनितुंव्यनृत्यन् ॥ ३८॥

जन्तुव्रजोऽपि वनजो हृतभक्तसक्ताऽ-
घेहं हि यत्सपदि केसरिनन्दनस्य ।
दक्षं निशम्य मनसाऽवहितेन चित्रं
शर्मप्रकर्षमतुलं लभते सलीलम् ॥ ३९॥

मुख्यस्य मर्कटकुले बतयातुधानान्
खाण्ड्यं सुनीतवत आशुगजस्य यच्च ।
तथ्यं व्यबुध्यत तदा जयतोपशब्दं
कः सत्कविर्नहि कपीन्द्रमुखं तदव्यात् ॥ ४०॥

इति मुखवर्णनं समाप्तम् ॥

पादेन योऽरिशिरसि प्रहर्तिं विधाय
दौःख्यप्रदां स्वचरणस्य च शोणिमानम् ।
विज्ञो न्यदर्शयत रक्तमिषेण नूनं
भीनाशकः कपिवरोऽस्तु स मे प्रसन्नः ॥ ४१॥

षट्पभ्दिरीश्वरपदाम्बुजयोर्यकः प्र-

णत्य स्थितोऽलिरिति चाशुगजश्च नागैः ।
श्रीमन्मृगारिभिरु केसरिपुत्र इत्यऽ-
दः संप्रधार्य जगृहे स्वत एवमेभिः ॥ ४२॥

पातात्स पावनिरपावनपापपातात्-
तुन्नस्वकानिह भवे परिधिन्वितुन्नः ।
रागाऽऽत्तराम इति चाक्षजयी निरागा
मोक्षप्रदोऽप्यविहितस्वसुभक्तमोक्षः ॥ ४३॥

खिन्नत्वमाप्य रुदितेन च योऽस्त्रपत्वं
लङ्कौकसामृतमसाधयदाञ्जनेयः ।
वन्द्यः स्व ऐक्षत शिवोद्भवतां यया चाऽऽ-
पुः क्षेममात्मसुहृदः स करोतु भद्रम् ॥ ४४॥

इति श्रीहनुमद् वर्णनं समाप्तम् ॥

आद्याऽक्षरप्रकटितोत्तमरामरक्षा-
स्तोत्रीयपद्यमणिनाऽत्यऽमुना स्तवेन ।
रक्षा भवत्युभयतस्त्विति गेय इत्योऽ-
ष्टव्यस्तथैष पठनीय उचेलिमोऽर्च्यः ॥ ४५॥

दाधीचवंश उदये ह्युदियाय कास-
ल्योपाह्वयश्छिर इनो द्विजरामवक्षः ।
तस्यात्मजेषु किल पञ्चसु पूर्वजन्मा
श्रीमाधवोऽधरत धीरधुरन्धरत्वम् ॥ ४६॥

एकात्मवृत्तरचने विदधत्प्रतिज्ञा
शास्त्रार्थसंलपनमाधित यः सभासु ।

श्रीगट्टुलालबुधतर्कगिरेशतारा-
नाथादिभिर्गुणिवरैश्च बहुप्रशस्तः ॥ ४७॥

तत्पुत्रयोर्भगवतीतिपदादिलालो
ज्येष्ठोऽस्ति पण्डितवरः पितृलब्धविद्यः ।
तस्याऽनुजेन च सुशिष्यवरेण नित्या-
नन्दाभिधेन बुधपादसुकिङ्करेण ॥ ४८॥

एष स्तवोऽरचि मयोत्सववैजयन्त्यां
सम्पूर्णवासरमहाधुरि वै जयन्त्याम् ।
लोकान् प्रमोदजलधावनुमज्जयन्त्यां
वर्षेत्रिषण्णवकुगे हनुमज्जयन्त्याम् ॥ ४९॥

पुरोभागितया हीनाः पुरो भागितया युताः ।
उत्साहयेयुरत्राऽऽर्या दयादृक्पातनेन माम् ॥ ५०॥

इति श्रीयोधपुरस्थदाधिमथ (दाहिमा) कासल्योपाख्य-
धीरधुरीणश्रीमाधवात्मजाऽऽशुकवि
पण्डित नित्यानन्दशास्त्रिरचितः
श्रीमारुतिस्तवः समाप्तः
॥ शुभं भवतात् ॥